इहेत्थ प्रागपागुदगधराग्
अरॅलली पुच्छिलीयते ॥ ६ ॥

॥ ९ ॥ ( अथर्व० २०।१३५।१-१३.)

भुगित्यभिगतः शलित्यपक्रान्तः फलित्यभिष्ठितः।
दुन्दुभिमाहननाभ्यां जरितरोथामो दैव ॥ १ ॥
कोशबिले रजनि ग्रन्थेर्धानमुपानहिं पादम्।
उत्तमां जनिमां जन्य
अनुत्तमां जनीन् वर्त्मन्यात् ॥ २ ॥
अलाबूनि पृषातकान्यश्वत्थपलाशम्।
पिपीलिकावटश्वसो विद्युत्
स्वापर्णशफो गोशफो जरितरोथामो दैव ॥ ३ ॥
वी मे देवा अक्रंसताध्वर्यो क्षिप्रं प्रचर।
सुसत्यमिद् गवामस्यसि प्रखुदसि ॥ ४ ॥
पत्नी यदृश्यते पत्नी
यक्ष्यमाणा जरितरोथामो दैव।
होता विष्टीमेन जरितरोथामो दैव ॥ ५ ॥
आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्।
तां ह जरितः प्रत्यायन्
तामु ह जरितः प्रत्यायन् ॥ ६ ॥
तां ह जरितर्नः प्रत्यगृभ्णन्
तामु ह जरितर्नः प्रत्यगृभ्णः।
अहानेतरसं न वि चेतनानि
यज्ञानेतरसं न पुरोगवामः ॥ ७ ॥
उत श्वेत आशुपत्वा उतो पद्याभिर्यविष्ठः।
उतेमाशु मानं पिपर्ति ॥ ८ ॥
आदित्या रुद्रा वसवस्त्वेनु
त इदं राधः प्रति गृभ्णीह्यङ्गिरः।
इदं राधो विभु प्रभु इदं राधो बृहत् पृथु ॥ ९ ॥
देवा ददत्वासुरं तद् वो अस्तु सुचेतनम्।
युष्माँ अस्तु दिवेदिवे प्रत्येव गृभायत ॥ १० ॥
त्वमिन्द्र शर्मरिणा हव्यं पारावतेभ्यः।
विप्राय स्तुवते वसुवनिं दुरश्रवसे वह ॥ ११ ॥
त्वमिन्द्र कपोताय च्छिन्नपक्षाय वञ्चते।
श्यामाकं पक्वं पीलु च वारस्मा अकृणोर्बहुः ॥ १२ ॥
अरंगरो वावदीति त्रेधा बद्धो वरत्रया।
इरामह प्रशंसत्यनिरामप सेधति ॥ १३ ॥

॥ १० ॥ ( अथर्व० २०।१३६।१-१६ )

यदस्या अंहुभेद्याः कृधु स्थूलमुपातसत्।
मुष्काविदस्या एजतो गोशफे शकुलाविव ॥ १ ॥
यदा स्थूलेन पससाणौ मुष्का उपावधीत्।
विष्वञ्चा वस्या वर्धतः सिकतास्वेव गर्दभौ ॥ २ ॥
यदल्पिकास्वल्पिका कर्कन्धूकेवपद्यते।
वासन्तिकमिव तेजनं यन्त्यवाताय वित्पति ॥ ३ ॥
यद् देवासो ललामगुं प्रविष्टीमिनमाविषुः।
सकुला देदिश्यते नारी
सत्यस्याक्षिभुवो यथा ॥ ४ ॥
महानग्न्यतृप्नद्वि मोक्रदद्स्थानासरन्।
शक्तिकानना स्वचमशकं सक्तु पद्यम् ॥ ५ ॥
महानग्न्युलूखलमतिक्रामन्त्यब्रवीत्।
यथा तव वनस्पते निरघ्नन्ति तथैवति ॥ ६ ॥
महानग्न्युप ब्रूते भ्रष्टोऽथाप्यभूभुवः।
यथैव ते वनस्पते पिप्पति तथैवति ॥ ७ ॥
महानग्न्युप ब्रूते भ्रष्टोऽथाप्यभूभुवः।
यथा वयो विदाह्य स्वर्गे नमवदह्यते ॥ ८ ॥
महानग्न्युप ब्रूते स्वसावेशितं पसः।
इत्थं फलस्य वृक्षस्य शूर्पे शूर्पं भजेमहि ॥ ९ ॥
महानग्नी कृकवाकं शम्यया परि धावति।
अयं न विद्म यो मृगः
शीर्ष्णा हरति धाणिकाम् ॥ १० ॥
महानग्नी महानग्नं धावन्तमनु धावति।
इमास्तदस्य गा रक्ष यभ मामद्ध्यौदनम् ॥ ११ ॥

सुदेवस्त्वा महानग्नीर्बबाधते महतः साधु खोदनम् ।
कुसं पीवरो नवत् ॥ १२ ॥
वशा दग्धामिमाङ्गुरिं प्रसृजतोऽग्रतं परे ।
महान् वै भद्रो यभ मामद्धयौदनम् ॥ १३ ॥
विदेवस्त्वा महानग्नीर्विबाधते
महतः साधु खोदनम् ।
कुमारिका पिङ्गलिका कार्द भस्मा कु धावति ॥१४॥
महान् वै भद्रो बिल्वो महान् भद्र उदुम्बरः ।
महाँ अभिक्त बाधते महतः साधु खोदनम् ॥१५॥
यः कुमारी पिङ्गलिका वसन्तं पीवरी लभेत् ।
तैलकुण्डमिमाङ्गुष्ठं रोदन्तं शुदमुद्धरेत् ॥ १६ ॥

॥ इति अथ कुन्तापसूक्तानि ॥

# अथ महानाम्न्यार्चिकः ।

( ६४१-६५० ) प्रजापतिः । इन्द्रस्त्रैलोक्यात्मा ।

विदा मघवन् विदा गातुमनुशँसिषो दिशः ।
शिक्षा शचीनां पते पूर्वीणां पुरूवसो ॥ १ ॥
आभिष्ट्वमभिष्टिभिः स्वऽ३र्न्नांशुः ।
प्रचेतन प्रचेतयेन्द्र द्युम्नाय न इषे ॥ २ ॥
एवा हि शक्रो राये वाजाय वज्रिवः ।
शविष्ठ वज्रिन्नृञ्जसे मँहिष्ठ वज्रिन्नृञ्जस
आ याहि पिब मत्स्व ॥ ३ ॥
विदा राये सुवीर्यं
भुवो वाजानां पतिर्वशाँ अनु ।
मँहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥
यो मँहिष्ठो मघोनामंशुर्न शोचिः ।
चिकित्वो अभि नो नयेन्द्रो विदे तमु स्तुहि ॥५॥
ईशे हि शक्रस्तमूतये
हवामहे जेतारमपराजितम् ।
स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥६॥
इन्द्रं धनस्य सातये
हवामहे जेतारमपराजितम् ।
स नः स्वर्षदति द्विषः ।
स नः स्वर्षदति द्विषः ॥ ७ ॥
पूर्वस्य यत्ते अद्रिवोऽशुर्मदाय ।
सुम्न आ धेहि नो वसो पूर्तिः शविष्ठ शस्यते ।
वशी हि शक्रो नूनं तन्नव्यं संन्यसे ॥ ८ ॥
प्रभो जनस्य वृत्रहन्त्समर्येषु ब्रवावहै ।
शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ॥९॥

अथ पञ्च पुरीषपदानि ।

एवाह्यो ३ऽ३ऽ३ व । एवा ह्यग्ने । एवाहीन्द्र ।
एवा हि पूषन् । एवा हि देवाः ।
ओम् । एवा हि देवाः । ओम् ॥ १० ॥
(८०७०)

॥ इति पञ्च पुरीषपदानि ॥ इति महानाम्न्यार्चिकः समाप्तः ॥

॥ इति देवतसंहिता समाप्ता ॥

